ताभ्यामव्यतिरेके वा भेदः पूर्वोक्त एव ते ।
सादृश्याऽपोहसामान्यकल्पना वारयिष्यते ॥१३५॥
वस्त्वन्तरस्य चाभावात्स्वयाऽपोहोऽपि दुष्करः ।
नाज्ञानं नाम किञ्चित्स्यादपोह्यं ज्ञानवादिनः ॥१३६॥
अपोह्यो न ह्यभावस्य कथंचिदुपपद्यते ।
वस्त्वन्तरमभावः स्यादपोह्यत्वाच्च वस्तुना ॥१३७॥
तेनाऽज्ञाननिवृत्तौ हि ज्ञानेऽन्यार्थः प्रसज्यते ।
कल्पितं स्यादपोह्यं चेद्, नात्यन्ताऽसत्यकल्पना ॥१३८॥

यदि त्वव्यतिरिक्तमेव ग्राह्यग्राहकाभ्यां सामान्यं, ततः पूर्ववद्भिन्नाभ्यामभिन्नत्वात् सामान्यस्याऽपि भेदः स्यादित्याह ताभ्यामिति ।

ननु जात्यात्मकसामान्याऽङ्गीकारे अमी दोषाः सन्तु, सादृश्यरूपमपोहरूपं वा किं न भवत्यत आह सादृश्येति ॥ १३५ ॥

विशेषतश्च ज्ञानमात्रवादिनोऽपोह्याभावान्नाऽपोहसिद्धिरित्याह वस्त्वन्तरस्येति । वस्त्वन्तराभावमेव दर्शयति नाज्ञानमिति । अगोनिवृत्तौ(१) त्वगवात्मानोऽश्वादयो वस्तुरूपाः सन्त्येवेति शेषः ॥ १३६ ॥

यदि तु वस्त्वन्तराभावेऽपि ज्ञानाभावमेवापोहेत् (२)तत्राह—अपोह इति । अभावस्यावस्तुरूपस्यापोह्यत्वे तदपोहात्मकं ज्ञानसामान्यं वस्तुरूपमेव स्यान्न निवृत्तिरूपं, न ह्यवस्तुनिवृत्तिरवस्तु भवति, तदवस्तुत्वे वाऽपोह्यस्याऽभावस्य वस्त्वन्तरत्वापत्तिरित्याह वस्त्वन्तरमिति । अत्रैव प्रयोगमाह अपो(३)ह्यत्वादिति । अज्ञानं वस्तु, अवस्त्वात्मकस्य सामान्यस्याऽपोह्यत्वात्, अश्वादिवदिति ॥ १३७ ॥

तेनाभावस्यापोह्यत्वायोगादज्ञाननिवृत्तिरूपे ज्ञानसामान्येऽङ्गीक्रियमाणे तदपोह्यमज्ञानं ज्ञानादन्यद्वस्त्वन्तरमर्थ एव तव प्रसज्यत इत्याह तेनेति । शङ्कते कल्पितमिति । दूषयति नेति । कल्पना हि बुद्धिविशेषः, न चात्यन्तासत्यस्य बुद्धिविषयता सम्भवति, भवन्मतेऽपि सर्वज्ञानानामात्मा ज्ञानान्तरं वा ग्राह्यमिति नाऽत्यन्ताऽसत्यस्य कल्पना सम्भवति ॥ १३८ ॥

---

( १ ) अगोनिवृत्त्या च गवात्मन इति पा० ।

( २ ) ज्ञानाभाव एवापोह्यस्तत्रापोहोऽपि अवस्तुनिवृत्तिः इति पा० ।

( ३ ) अग्राह्यत्वादिति पा० ।

बुद्धिरज्ञाननिर्भासा तवाऽज्ञानं प्रकल्पितम् ।
ततश्च ज्ञानमेवैकमपोह्यत्वेन सम्मतम् ॥ १३९ ॥
न चाऽऽत्माऽपोह एवास्ति काचित् सामान्यकल्पने ।
वृक्षस्य न ह्यपोह्यत्वं वृक्षेणैव कदाचन ॥ १४० ॥
अपोह्ये चैव विज्ञाने ज्ञानत्वं न भवेत्तव ।
वृक्षत्वं न ह्यपोह्येषु घटत्वादिषु युज्यते ॥ १४१ ॥
ततश्चाज्ञानमेवार्थ इत्यभिन्नार्थता भवेत् ।
अज्ञानप्रत्ययश्चाऽयं किमालम्बन इष्यते ॥ १४२ ॥
न तावज्ज्ञाननिर्मुक्तमज्ञानं ग्राह्यमस्ति ते ।
ननु वस्तु निषिद्धं, तदभावः किं न गृह्यते? ॥ १४३ ॥
भावो न गृह्यते येन तस्याऽभावेषु का कथा ।
स्वांशपर्यवसानं च तुल्यमत्रापि कारणम् ॥ १४४ ॥

---

एवं च कल्पितमप्यज्ञानमज्ञानात्मिका बुद्धिरेव तवाऽऽपद्यतइत्याह बुद्धिरिति । ततः किमित्याह ततश्चेति ॥ १३९ ॥

तथापि किमित्याह न चेति । न हि ज्ञानस्य ज्ञानेनाऽपोहः सम्भवति वृक्षस्येव वृक्षेणेति । अपोह्यस्य (१)चाऽज्ञानस्य ज्ञानत्वं न स्यादिति ४०

भवन्मतेऽपि वृक्षाऽपोह्येष्विव घटादिषु न वृक्षत्वमित्याह अपोह्य इति ॥ १४१ ॥

ज्ञानत्वाऽभावे चाऽज्ञानशब्दस्याऽर्थशब्देनाऽभिन्नार्थत्वमित्याह ततश्चेति । किं च योऽयमज्ञानप्रत्ययो ग्राह्योपस्थापकः स किमालम्बनः? न ज्ञानाऽतिरिक्तं तावदस्ति भवतां, यदालम्बनं स्यादित्याह अज्ञानेति । चोदयति नन्विति । वस्त्वेव हि ज्ञानातिरिक्तमस्माभिर्निषिध्यते नाभावः, तेन ज्ञानाभावस्याऽऽलम्बनत्वमस्तीति ॥ १४२ ॥ १४३ ॥

परिहरति भाव इति । सर्वप्राणिप्रसिद्धमतिस्थूलमपि महीमहीधरा-द्यपह्नुवानः कथमभावमङ्गीकुर्यादिति । यच्च भावाऽपह्नवे कारणं सर्व-ज्ञानानां स्वांशे ज्ञानान्तरे वा वृत्तिर्नान्यत्रेति, तदभावापह्नवेऽपि तुल्य-मित्याह स्वांशेति । स्वांशग्रहणं ज्ञानान्तरस्याप्युपलक्षणम् । ज्ञानान्तर ग्राह्यत्वपक्षेऽपि निराक्रियमाणे स्वांशपक्षोपक्षेपः, तस्मिन्नपि पक्षे तु ल्यमिदं दूषणमिति दर्शयितुम् ॥ १४४ ॥

---

(१) अपोह्यत्वे चाज्ञानत्व न स्यादिति पा० ।